TRIVANDRUM SANSKRIT SERIES

No. LVI.

# THE MANUSHYÂLAYACHANDRIKÂ

EDITED BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.



TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS
1917.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५६.

# मनुष्यालयचन्द्रिका

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधिता ।

---

सा च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशिता ।

# PREFACE.

Manushyâlayachandrikâ is a treatise on the construction of houses and allied subjects. Works on architecture are generally found to be full of grammatical errors, but this work is free from any such error and is written in various metres.

Very little is known about the author of this work. It can, however, be surmised that he was a native of the Kerala country as he refers to the place Nâvâ or Tirunâvâ in one of the introductory verses at the beginning of this work. The author says that he has closely followed Tantrasamuchchaya of Nârâyana in his work. It is clear therefore that he is later than the author of Tantrasamuchchaya who flourished in the early part of the 15th century A. D.

There are, throughout this work, many technical expressions peculiar to architecture. I hope to publish a vocabulary of all such terms occurring in this work as well as in the Mayamata, Silparatna and other works under preparation soon after their publication.

The edition of the work is based on the following three palmleaf manuscripts.

1. (क) Belonging to the Palace Library.
2. (ख) Belonging to Manalikkara Mathom.
3. (ग) Belonging to Ennakkattu Kottaram.

All these manuscripts are in Malayalam characters. The colophon at the end of the manuscript ख shows that it was copied in the Kollam year 950. The other two manuscripts appear older than the Manuscript ख.

Trivandrum,
18th May 1917

T. GANAPATI SÂSTRÎ.

# निवेदना ।

इय **मनुष्यालयचन्द्रिका** नाम मनुष्यगृहनिर्माणसम्बद्धान् विधीन् बोधयति । अपभ्रंशभूयिष्ठाः प्रायः शिल्पग्रन्थाः । **मनुष्यालयचन्द्रिका** तु साधुभिः शब्दैः अन्यैश्च नानावृत्तैरुपनिबद्धा ।

अस्याः प्रणेता क इति न ज्ञायते। किन्तु स 'श्रीमत्कुण्डपुरे' (१. २) इति श्लोके 'नावानाम्नि धाम्नि' इति **तिरुनावाक्षेत्रं** केरलीयं स्मरन् केरलीय इत्यनुमातुं शक्यते। **तन्त्रसमुच्चयकर्तुर्नारायणा**दर्वाचीनश्चासौ, यतः तन्त्रसमुच्चयोक्तमनुसृत्यैवात्र संक्षिप्यते' (१. ८) इत्यात्मनस्तन्त्र**समुच्चया**नुसारित्वमाह । **तन्त्रसमुच्चयस्य** तु कालः क्रैस्ताब्दीयस्य पञ्चदशशतकस्य पूर्वो भाग इति **वाररुचसंग्रह**स्योपोद्घातेऽवोचाम ।

इह शिल्पशास्त्रैकव्यवहार्याः सन्ति साङ्केतिका बहवः शब्दाः । तेषाम् अस्मत्प्रकाशयिष्यमाण**मयमत**–**शिल्परत्ना**दिग्रन्थगततथाविधशब्द-सहितानाम् अर्थनिर्देशहृद्यां कामप्यनुक्रमणीं **मयमता**दिमुद्रणोत्तरं रचयित्वा प्रकाशयितुमिच्छामः ।

अस्याः शोधनाधारभूता ग्रन्थास्तावत् त्रयः । तत्रैको राजकीयग्रन्थशालीयः क.संज्ञः, द्वितीयः **पद्मनाभपुराभ्यर्णमणलिक्कर**मठीयः ख.संज्ञः, तृतीय **एण्णक्काट्टुराज**स्वामिको ग.संज्ञः । सर्व एते तालपत्रात्मकाः केरलीयग्रन्थलिपयः । तत्र ख.संज्ञः ९५० तमकोलम्बाब्दलिखितः, ततोऽपि वृद्धतरवदवभासमानावन्यौ ।

अनन्तशयनम्
१५-९-१९१७.

त. गणपतिशास्त्री.

॥श्रीः॥

# मनुष्यालयचन्द्रिका।

नृसिंहयादवाकारतेजोद्वितयमद्वयम्।
राजते नितरां राजराजमङ्गलधामनि ॥ १ ॥

श्रीमत्कुण्डपुरे विराजति पेरक्कोडे च तेजः परं
नावानाम्नि च धाम्नि यच्च नितरां मल्लीविहारालये।
अश्वत्थाख्यनिकेतनेऽपि च पुरे श्रीकेरलाधीश्वरे
सम्भूयैतदुरुप्रकाशविषये चित्ते ममोज्जृम्भताम्॥

श्रीमङ्गलास्पदसदाश्रयनीलकण्ठ-
प्रेमप्रकर्षनिलयः सकलाभिवन्द्यः।
श्रीमद्गिरीन्द्रतनयातनयोऽङ्घ्रिभाजां
कामप्रदो जयति मत्तमतङ्गजास्यः ॥ ३ ॥

तद्देवपादकमलैकसमाश्रयः को-
ऽप्युद्द्योतमानगुरुवर्यकृपाभियोगात्।

---

१. 'व' ख. पाठः.

G.P.T. 2770. 500 19-9-1092.

विद्यापरिश्रमपरो बहुधात्मशुद्ध्या-
मुद्योगवान् भवति बालविबोधने च ॥ ४ ॥

येषां श्रुतिप्रणयिनी धिषणा यदीय-
सङ्कल्पकल्पिततनुः परमेश्वरोऽपि ।
तेषां महीसुमनसां महनीयभासा-
मुत्तंसये परमुदारपदारविन्दम् ॥ ५ ॥

निसर्गसंसिद्धसमस्तशिल्प-
प्रावीण्यमाद्यं द्रुहिणं प्रणम्य ।
मया मनुष्यालयचन्द्रिकैषा
विलिख्यते मन्दधियां हिताय ॥ ६ ॥

मयमतयुगलं प्रयोगमञ्ज-
र्यपि च निबन्धनभास्करीययुग्मम् ।
मनुमतगुरुदेवपद्धतिश्री-
हरियजनादिमहागमा जयन्ति ॥ ७ ॥

मार्कण्डेययुगं पराशरमुरारिप्रोक्तरत्नावली-
सारान् काश्यपविश्वकर्ममतयुग्माद्यं कुमारागमम् ।
सव्याख्यां हरिसंहितां विवरणाद्यं वास्तुविद्यादिकान्
दृष्ट्वा तन्त्रसमुच्चयोक्तमनुसृत्यैवात्र संक्षिप्यते ॥ ८ ॥

मर्त्यो विप्रादिवर्णेष्विह भवनविधानोत्सुको यः स पूर्वं
विप्रं तद्देशसम्बन्धिनमखिलगुणैरन्वितं संवृणीत ।

सोऽयं तद्वर्णयोग्यां क्षितिमथ परिकल्प्यात्र पूजादि कृत्वा
वास्तोः शास्त्रोक्तरीत्या गृहमतिनिपुणैः कारुभिः कारयेत ॥

वेदागमादिविहितान्यवधार्य विप्रैः
कार्यो विधिः सकलदेवनरालयानाम् ।
तद्वाक्यतः सकलधामसु मृच्छिलादे-
रन्योन्यमेलनमुशन्ति हि कारुकृत्यम् ॥ १० ॥

स्थपतिः सूत्रग्राही तक्षकसंज्ञश्च वर्धकिः क्रमशः ।
स्वोचितकर्मणि दक्षा ग्राह्यास्ते कारवश्चतुर्धेति ॥ ११ ॥

सर्वशास्त्रविहितक्रियापटुः
सर्वदावहितमानसः शुचिः ।
धार्मिको विगतमत्सरादिको
यः स च स्थपतिरस्तु सत्यवाक् ॥ १२ ॥

जानीयात् स्थापनार्हं स्थपतिमथ गुणैः प्रायशस्तेन तुल्यः
सूत्रग्राही सुतो वा स्थपतिमतिगतिप्रेक्षकः शिष्यको वा ।
स्थूलानां तक्षणात् तक्षक इति कथितः सन्ततं हृष्टचित्तो
दार्वाद्यन्योन्यसंमेलनपटुरुदितो वर्धकिः सावधानः ॥ १३ ॥

विना स्थपत्यादिचतुष्टयेन
गृहादि कर्तुं न च शक्यतेऽस्मात् ।
प्रसादितैस्तैरथ विप्रवर्यैः
सुसूक्ष्मधीः कारयतां गृहाणि ॥ १४ ॥

लक्षणहीने धामनि वसतामशुभानि सम्भवन्त्येव ।
जन्माद्यवसानान्तं मनसा निश्चित्य कारयेत् तस्मात् ॥ १५ ॥

तत्र क्रमेण बहुधा धरणीपरीक्षा
दिङ्निर्णयादिशुभवीथिपरिग्रहश्च ।
धाम्नां प्रमाणविधिरङ्कणकुट्टिमादी-
न्यङ्गानि बाह्यविधयश्च तथा विधेयाः ॥ १६ ॥

गोमत्यैः फलपुष्पदुग्धतरुभिश्चाढ्या समा प्राक्प्लवा
स्निग्धा धीररवा प्रदक्षिणजलोपेताशुबीजोद्गमा ।
सम्प्रोक्ता बहुपांसुरक्षयजला तुल्या च शीतोष्णयोः
श्रेष्ठा भूरधमा समुक्तविपरीता मिश्रिता मध्यमा ॥ १७ ॥

वृत्तार्धेन्दुनिभा त्रिपञ्चरसकोणा शूलशूर्पाकृति-
मत्स्यानेकपकूर्मपृष्ठकपिलावक्रोपमा मेदिनी ।
भस्माङ्गारतुषास्थिकेशचितिवल्मीकादिभिः संयुता
वर्ज्या मध्यनता सगर्भकुहरा विस्रा विदिक्स्थापि च ॥

इन्द्राशादिनतावनी तदितराशाद्युन्नताष्टौ क्रमाद्
गोवह्न्यन्तकभूतवारिफणभृन्मातङ्गधान्याह्वयाः ।
वर्ध्योऽत्र क्रमशोऽभिवृद्धिधनहान्यन्तार्थहानिप्रदा
दारिद्र्यात्मजहानिवित्तशुभदास्ताद्दक्क्षितौ तस्थुषाम् ॥

प्रवासदा मध्यनता धरित्री
मध्योन्नता वित्तसुखादिहन्त्री ।

वह्न्यादिवाय्वन्तनता धरित्री
प्रायेण दारिद्र्यफलप्रदा स्यात् ॥ २० ।

मध्योच्चायां धरित्र्यां प्रथममथ गृहे कल्पिते स्याद् दशाब्दं
वृद्धिः प्रागुन्नतायामपि हुतवहयाम्योन्नतायां शताब्दम् ।
साहस्राब्दं निर्ऋत्युन्नतधरणितले वारुणे स्यात् तदर्धं
शेषास्वर्काष्टषट्काः शरद इह ततः स्वोक्तरूपं फलं स्यात् ॥

पूर्वस्यां बकुलो वटश्च शुभदोऽवाच्यां तथोदुम्बर-
श्चिञ्चा चाम्बुपतौ तु पिप्पलतरुः सप्तच्छदोऽपि स्मृतः ।
कौबेर्यां दिशि नागसंज्ञिततरुः प्लक्षश्च संशोभनाः
प्राच्यादौ तु विशेषतः पनसपूगौ केरचूतौ क्रमात् ॥

अश्वत्थोऽग्निभयं करोति बहुधा प्लक्षः प्रमादप्रदो
न्यग्रोधः परशस्त्रपातमुदरव्याधिं तथोदुम्बरः ।
सम्प्रोक्तप्रतिदिक्स्थितास्त्वपि च ते चान्ये सुवर्णात्मका-
श्छेद्या मन्दिरतस्तरूच्चयुगसीमाभ्यन्तरस्था यदि ॥ २३ ॥

संस्थाप्या मन्दिरपार्श्वपृष्ठदिशि तु श्रीवृक्षबिल्वाभया
व्याधिघ्नामलकीसुरद्रुमपलाशाशोकमालेयकाः ।
पुन्नागासनचम्पकाश्च खदिरस्तद्वत् कदल्यादयो
जातीनागलतादयोऽपि सकलाः सर्वत्र संशोभनाः ॥

अन्तःसारास्तु वृक्षाः पनसतरुमुखाः सर्वसाराश्च शाका-
श्चिञ्चाद्यास्तालकेरक्रमुकयवफलाद्या बहिस्सारवृक्षाः ।

---

१. 'शस्ता म' ग. पाठः.

निःसाराः शिग्रुसप्तच्छदशुकतरवः किंशुकाद्याश्च कार्या-
स्तेष्वाद्या मध्यभागे बहिरपि च ततः सवसारास्ततोऽन्ये ॥

कारस्करारुष्करकण्टकिद्रुश्लेष्मातकाक्षद्रुमपीलुनिम्बाः ।
स्नुहीपिशाचद्रुमहेमदुग्धाः सर्वत्र नेष्टा अपि शिग्रुरन्तः ॥

विष्णोः पृष्ठे च वामे नरभवनमनर्थप्रदं दक्षिणे चा-
प्यग्रे भागे च कालीनरहरिशिवतद्भिन्नसर्वोग्रमूर्तेः ।
आर्यो निम्नस्थलस्थो यदि मनुजगृहं दक्षिणेऽग्रेऽस्य तस्मा-
दुच्चत्वं नेष्टमिष्टं निकटमपि तदन्यत्र तत्पादभाजाम् ॥

व्रीहिक्षेत्रादिदेवालयजलधिनदीतापसागारगोष्ठ-
ग्रामादीनामतीवान्तिकमपकुरुते नैकधा मन्दिरेषु ।
देवागारान्नराणामतिशुभदमिदं किञ्चिदूनं समं वा
तस्मादभ्युन्नतं च द्वितलविधिरयं नेष्यते तत्समीपे ॥

विप्रादिक्रमतः कुशेषुवनदूर्वाकाशयुक्ता भुव-
स्तुल्यातानवितानसिन्धुररसाब्ध्यंशाधिदीर्घा अपि ।
श्वेता पाटलपीतमेचकरुचश्चाज्यासृगन्नासवा-
मोदाः स्वादुकषायतिक्तकटुकास्वादान्विताश्च स्मृताः ॥

विप्राणां भूरवागुन्नतघनदनतोदुम्बराढ्या शुभा स्यात्
प्राङ्निम्ना वारुणोच्चा चलदलसहिता भूः शुभा बाहुजानाम् ।
प्रागुच्चाब्धीशनिम्ना वटतरुसहिता भूर्विशां पादजानां
सा सप्लक्षा तथा चेद् यमनतधरणी चान्यथा सर्ववर्ज्याः ॥

---

१. वे ख. ग. पाठः.

सङ्कीर्णरूपा वसुधात्र वर्णैर्गन्धै रसैश्चाखिलवर्जनीया ।
एनामनालक्षितवर्णचिह्नां नक्तं परीक्षेत निमित्ततश्च ॥ ३१ ॥

क्ष्मां खात्वामघटं निधाय भृतधान्यं वर्धमानं मुखे
कृत्वासिच्य घृतं निशासु सितरक्तापीतकृष्णा दशाः ।
विप्रादिक्रमतः प्रदीप्य विधिवन्नीते मुहूर्ते ज्वलेद्
वर्त्तिर्यस्य धरास्य तासु सकलास्विद्धासु सर्वोचिता ॥

भूगर्ते जलपूरितेऽत्र विधिवद् द्रोणादिपुष्पं क्षिपेत्
प्रादक्षिण्यगतिः शुभं सुमनसां यद्यन्यथा निन्दितम् ।
पुष्पो दिक्ष्वथ संस्थिते साति शुभं कोणेषु चेन्निन्दितं
ज्ञात्वेत्यादिशुभाशुभान्यथ समीकुर्यात् क्ष्मां सूक्ष्मधीः ॥

इति मनुष्यालयचन्द्रिकायां भूपरीक्षापरिग्रहो नाम
प्रथमोऽध्यायः ॥

---

## अथ द्वितीयोऽध्यायः ।

यन्त्रेणावनतादिना च निपुणो यद्वाम्बुसम्पूरणे-
नोर्वीं चारु समीकरोत्वथ दृढं शङ्कुं कराधायतम् ।
मूले द्व्यङ्गुलविस्तृतः क्रमवशादग्रे तदर्धोन्मित-
व्यासं वृत्ततरं सरोजमुकुलाकाराग्रमाकल्पयेत् ॥ १ ॥

शङ्कुदीर्घयुगसम्मितसूत्रेणाकलय्य परिवृत्य सुवृत्तम् ।
वृत्तमध्यमवधार्य सुसूक्ष्मं शङ्कुमत्र तु दृढं निवेशयेत् * ॥२॥

---

१. 'प्य' क. पाठः.

---

* इह स्वागतारथोद्धतयोरुपजातिः ।

शङ्कुच्छायाग्रभागे त्ववहितहृदयो वृत्तलग्नेऽङ्कयित्वा
प्राह्णान्ते पश्चि(मस्यां ? मायां) दिशि तदितरदिश्येवमेवापराह्णे ।
पाश्चात्त्येऽन्येद्युरप्यङ्कनमपि च विधायाङ्कयोरेतयोर-
प्यन्तर्भागत्रिभागे नयतु गतदिनाङ्कं तदेवेह सूक्ष्मम् ॥ ३ ॥

पूर्वापरेद्युः प्रभवाङ्कयुग्ममेवं सुसूक्ष्मं परिकल्पितं यत् ।
तदङ्कयुग्माहितसूत्रमेव पूर्वापराशाप्रभवं सुसूक्ष्मम् ॥ ४ ॥

एवं क्षेत्रस्य मध्ये सुविहितमिह यद् ब्रह्मसूत्रं तदाहु-
स्तन्मध्येऽन्योन्यमन्तर्गतमथ रचयेद् वृत्तयुग्मं च धीमान् ।
तद्योगात् तिर्यगुद्यज्झषजठरसुषुम्नाध्वना सूत्रमेकं
याम्योदग्गामि सूक्ष्मं रचयतु यमसूत्रं तदित्यामनन्ति ॥५॥

तत्सूत्रद्वितयेऽथ दिक्षु चतसृष्वङ्कान् समं कल्पयि-
त्वाङ्कारोपितमध्यकानि सुसमं चत्वारि वृत्तानि च ।
सिध्यन्त्यत्र विदिक्षु वृत्तयुगलीयोगेन मत्स्याः शिवा-
ग्न्यग्रास्तद्गतसूत्रयुग्ममपि चात्राध्यश्रमाकल्पयेत् ॥ ६ ॥

सूत्रे प्रागुदगग्रके क्षितितले कृत्वा चतुःखण्डिते
खण्डे कल्पयतु द्विजादिवसतिं शार्वेऽथ वा नैर्ऋते ।
क्षेत्रे विस्तृतिरस्ति चेत् पुनरपि श्रुत्यंशिते गृह्यते
शैवे नैर्ऋतखण्डमेव निर्ऋतौ शैवं शुभं चोभयोः ॥ ७ ॥

धात्रीतलेऽध्र्यंशिनि, मानुषाख्यं गृहाभिवृद्धिप्रदमैशखण्डम्
देवाह्वयं नैर्ऋतमिष्टदं स्यादुभे शुभे गेहविधौ नराणाम् ॥ ८ ।
आग्नेयखण्डं यमसंज्ञितं स्यान्मृतिप्रदं चाखिलवर्ज्यमेतत् ।
वायव्यमप्यासुरसंज्ञितत्वान्निन्द्यं विशां क्वापि च गृह्यते तत्

भूपादिवर्णनियमेन यमोदगाया-
मोपेतमध्यचतुरश्रमहीतले तु ।
कर्णाध्वना निर्ऋतिमारुतकोणमूल-
शैवानलाग्रभवसूत्रयुगं हि रज्जुः ॥ १० ॥

सूत्रस्य रज्ज्वोरपि चाग्रमूलैर्विद्धे गृहादिस्थितमध्यसूत्रे ।
हीनायतिप्राङ्गणतश्चतुःशालागारतोऽन्यत्र भवन्ति दोषाः ॥

प्रागादि क्रमशः स्याद् वेधफलं पतिवियोगकुष्ठरुजौ ।
रिपुपीडात्मजधनहान्यनिलरुजः स्वकुलधान्यहान्याद्याः॥१२॥

क्षेत्रस्यैशादिखण्डे नवकृतिपदसम्भिन्नवास्त्वङ्ककोष्ठे-
ष्वेकस्यार्कांशतः स्याद् विततिरिह महासूत्ररज्ज्वोः प्रसिद्धा ।
तत्ताद्दिग्वर्गकोष्ठैर्विहितशतपदेष्वेककोष्ठे भभागो
विस्तारं सूत्ररज्ज्वोरहिकृतिपदभिन्नेष्वथैकाष्टिभागः ॥ १३ ॥

समस्तगेहाङ्गणकूपवापीद्वारादिमध्यस्थितसूत्रवेधः ।
मिथः समस्तेष्वपि वर्जनीयो रज्ज्वोश्च कोणालयकर्णयोश्च ॥

वीथीविस्तृतिकल्पनासु बहुधा दण्डो भवेन्मेदिनी-
विस्ताराद् गृहकर्तृपूरुषसमोत्सेधोऽत्र तालो मतः ।
तालैस्तैर्दशनन्दवारणमितैर्दण्डस्त्रिधा तेषु त-
द्वीथीविस्तृतिमेकतो वितनुयाद् यद्यस्ति भूविस्तृतिः ॥१५॥

नन्दद्वन्द्वपुटेन वा वृतितया बाह्यादिमध्यान्तिमा
वीथ्यः स्युः परितः पिशाचदिविषद्वित्ताधिभूदण्डिनाम् ।

---

१. 'लतं वा' ग. पाठः.

नागाम्ब्वग्निविनायकद्रुहिणनाम्नां चासु निन्द्याः स्मृताः
पैशाचाग्न्यहिदण्डिनां गृहविधौ वीथ्यश्चतुर्दिक्ष्वपि ॥ १८ ॥

यावत् कल्पितमङ्गणं गृहविधौ स्वार्धान्विता तावती
वीथीविस्तृतिरुत्तमाङ्गणसमा मध्या तदल्पाधमा ।
क्षेत्रेऽल्पे पुनरङ्कणार्धविततां वीथीं प्रकुर्यात् तदा
प्राच्योदीच्यगृहं भवेत् सलिलवीथ्यारूढमेवं च वा ॥

क्षेत्रेऽत्यल्पे तु मध्येऽङ्गणमपि च कृतान्तात्मभूसूत्रयोगात्
किञ्चिन्नीत्वा स्वगत्यापि च भवनचतुष्कं कृतं दृश्यते च ।
अत्यल्पा एव वीथ्यो ह्यशुभशुभफलान्येवमेवाल्परूपा-
ण्यस्मादीशादिखण्डाद्यधिगतनववीथीविधिर्नेष्यतेऽत्र ॥

यावत् प्राङ्गणदैर्घ्यमानममुनैकाध्यर्धवीथीततं
तेनाष्टादशभूमिमानमिति वा क्षेत्राप्तिरन्तः क्रमात् ।
मर्यादानियमप्रहीणमनुजागारेऽपि तत्प्राङ्गणा-
देवं क्षेत्रमितिं करोतु च पुनर्वप्रान्तमौच्चित्यतः ॥ १९ ॥

एकीकृत्य गणेशपङ्कजभुवोर्वीथीमथैशेऽथवा
खण्डे नैर्ऋतकेऽत्र वास्तुपदमेकाशीतिखण्डात्मकम् ।
यद्वा नागकृतिप्रभिन्नमथवा दिग्वर्गखण्डोदितं
कुर्यादेकमिहाङ्गमर्मरचनां वास्तोश्च तद्देवता ॥ २० ॥

नाड्यः प्रागुदगग्रगा दश दशैकाशीतिकोष्ठे शिवा-
ग्न्यग्राः पञ्च पृथङ् नवोर्मिगुणकोष्ठस्थास्तथा रज्जवः ।

---

१. 'स्वोलपत' क. पाठः. 'स्वोच्चत' ख. पाठः.

मर्माण्यष्टरसाशुगाब्धिगुणसङ्ख्यानैरकोष्ठस्थितै

सूत्रैर्योगसमुद्भवानि तु शतं वर्ज्यानि कुड्यादिषु ॥ २१ ॥

प्राग्वोदक्पदभास्करांशदलमात्रं मर्मसूत्रस्थितै-

र्नीत्वा विन्यसनान्न मर्मपरिपीडा स्तम्भकुड्यादिषु ।

वास्तुन्यत्र निपीडिते महिषसिंहानेकपानां शिरो

हैमं कूर्मवराहयोश्च निखनेत् तच्छान्तये शान्तिकृत् ॥

एकाशीतिपदे प्रकल्प्य नवकं मध्येऽस्य बाह्यावृतौ

षट्कं दिक्षु विदिक्षु युग्मयुगलं चैकैकशस्तद्बहिः ।

चत्वारिंशदथैषु पञ्च च विरिञ्चाद्याः पदेषु स्थिता

बाह्येऽष्टावपदस्थितास्त्र्यधिकपञ्चाशत् स्युरेवं सुराः ॥ २३ ॥

ईशाद्यं बहिरावृतिस्थपदकेष्वीशानपर्जन्यका-

वैन्द्रीन्द्रौ रविसत्यकौ भृशखगैव्यादांस्तथा पूषणः ।

भूयो वै वितथं गृहक्षतयमौ गन्धर्वभृङ्गौ मृगं

पित्राख्यान् प्रतिहारपालमपि सुग्रीवं क्रमात् कल्पयेत् ॥

भूयः पुष्पादिदन्तं वरुणमसुरशोषाख्यरोगेरनागौन्[2]

मुख्यं भल्लाटमिन्द्वर्गलमदितिदिती चेति बाह्यावृतौ[3] स्युः ।

ईशाद्यावापवत्सार्यकसवितृकसावित्रसंज्ञौ विवस्वा-

निन्द्राख्यश्चेन्द्रजिन्मित्रकशिवशिवजिद्भूभृतोऽन्तर्वृतौ स्युः ॥

---

१. 'गौ', २. 'खमु' (?), ३. 'वृति स्युः' ग. पाठः.

ब्रह्मा मध्यपदेऽथ शर्वसहितः स्कन्दोऽर्यमा जृम्भकः
प्रागादौ पिलिपिञ्छकश्च[1] चरकीशादौ विदार्याह्वया ।
भूयः पूतनिका च पापपदपूर्वा राक्षसी बाह्यत-
श्चैतेऽष्टावपदस्थिताश्च परितो देवग्रहास्तद्बहिः ॥ २६ ॥

आसीद् दैत्यः प्रवृत्तो निजभुजबलवीर्यादिनाक्रान्तकाष्ठा-
निष्ठो द्वेष्टा सुराणां स तु युधि पतितो विद्धगात्रो धरित्र्याम् ।
व्याप्तः सर्वत्र पश्चाद् बहुतरपरिवृत्त्यैव पृथ्वीं विमथ्नन्
मर्त्या दुःस्था मुनीन्द्रास्त्वपि च मखभुजस्तावदेवं बभूवुः ॥

सर्वव्यासेऽप्यमुष्मिन्नतनु तनुघटाभ्यन्तरे व्योम यद्वत्
तद्वन्नित्यं विशेषान्नगरपुरमहीक्षेत्रखण्डाङ्गणादौ ।
उत्ताने नैर्ऋताशाविनिहितचरणे यावदीशात्तशीर्षे
जाते तावन्निषेदुः स्थिरमिह विबुधास्तस्य देहे क्षणेन ॥

मूर्ध्नीशोऽस्य तु संस्थितो नयनयोः पर्जन्यकश्चादिति-
श्चापस्तद्वदने तथा गलतले तस्यापवत्साह्वयः ।
वामश्रोत्रगतो जयन्त इतरत्रास्यादितिः संस्थिता
वामांसे स्थितवानमर्त्यपतिरप्यंसेऽर्गलो दक्षिणे ॥ २९ ॥

अर्कादयो वामभुजस्थिताः स्युश्चन्द्रादयो दक्षिणहस्तगाश्च ।
वामप्रकोष्ठे सविता च सावित्रोऽन्यत्र रुद्रः शिवजित् प्रकोष्ठे ॥

महीधरायौ कुचयोर्विवस्वान् मित्रश्च कुक्षौ द्रुहिणोऽथ नाभौ ।
इन्द्रोऽस्य मेढ्रेऽण्डयुगे तु तज्जित् पाददृये तस्य परे प्रविष्टाः ॥

---

१. 'विठिवञ्छकं च च' ग. पाठः. २. 'यः' ख. ग. पाठः.

ता देवता वास्तुशरीरसंस्थाः सन्तर्पितास्त्विष्टफलप्रदाः स्युः ।
ताश्चेदनिष्टा विपरीतदाः स्युस्तस्माद् विदध्यादिह वास्तुपूजाम् ॥

इति मनुष्यालयचन्द्रिकायां दिङ्निर्णयादिशुभवीथी-
परिग्रहवास्तुदेवतानिर्णयो नाम
**द्वितीयोऽध्यायः ।**

---

## अथ तृतीयोऽध्यायः ।

शिम्बिः साष्टतिलैर्यवोदरमिति प्राहुस्तदष्टोन्मितं
मात्राख्याङ्गुलमङ्गुलैरिनमितैः प्रोक्ता वितस्तिस्ततः ।
तद्द्वन्द्वं करकिष्क्वरत्निभुजदोर्मुष्ट्याादिसंज्ञं तत-
स्त्वेकैकाङ्गुलवृद्धितोऽङ्गुलविशेषादप्यथो भिद्यते ॥ १ ॥

मात्राख्याङ्गुलिपञ्चविंशतिमितं मानं विमाने स्मृतं
प्राजापत्यकसंज्ञितं सुरगृहे तेनापि मेयं क्वचित् ।
एतैरेव वराङ्गुलैः परिमितं षड्विंशतिप्रोन्मितै-
र्मानं क्वापि समस्तधाम्नि विहितं नाम्ना धनुर्मुष्टिकम् ॥

सम्प्रोक्ताङ्गुलिसप्तविंशतिमितं मानं यदुक्तं बुधै-
र्नाम्ना तत्तु धनुर्ग्रहं[1] यदमुना ग्रामादिकं मीयते ।
रथ्याध्वोपवनादिसम्मितिविधौ वापीतटाकादिके
चेष्टं तत्र धनुर्ग्रहं[2] त्वथ धनुर्मुष्टिश्च तत्रेष्यते ॥ ३ ॥

अष्टाविंशतिसंमिताङ्गुलिमितं प्राच्याख्यमानं भवेद्
वैदेहं नवविंशतिप्रतिमितैर्मात्राङ्गुलैः सम्मितम् ।

---

१, २. 'नुग्रहं' क. ख. पाठः.

स्यात् त्रिंशत्प्रवराङ्गुलीपरिमितं वैपुल्यमेकाङ्गुली-
युक्तं तत्तु भवेत् प्रकीर्णमिति दोर्मानप्रभेदोऽष्टधा ॥ ४ ॥

भूसुरकार्ये निलये धनुर्ग्रहं[1] च प्रकीर्णं च ।
वैपुल्यधनुर्मुष्टी भूपानां मानसाधने योज्ये ॥ ५ ॥

प्राजापत्यं च वैदेहं वैश्यानां सम्मतं भवेत् ।
किष्कुः प्राच्यं च शूद्राणां किष्कुः सर्वत्र संमतः ॥ ६ ॥

स्वस्वोक्तमानादुपरि प्रदिष्टं सर्वं न चेष्टं क्षितिपादिकानाम् ।
अधस्स्थमानं सकलं क्रमेण वैश्यक्षितीशद्विजवर्णयोग्यम् ॥७॥

सुरालये समस्तान्यप्यभीष्टानि यथेप्सितम् ।
मानानि श्रेष्ठमध्याधमाङ्गुलोत्थानि च क्वचित् ॥ ८ ॥

यवोदरैरष्टभिरुन्मितं यन्मात्राङ्गुलं तत् कथितं वरिष्ठम् ।
क्रमेण सप्तांशयवोदरैर्यत् तन्मध्यमं चाधमसंज्ञितं च ॥ ९ ॥

षाष्टिकशाल्युदरैरप्यष्टाद्यङ्कैर्वराङ्गुलाद्यं वा ।
तच्छाल्यायतजलधिः सार्धत्रितयं त्रिसंमितैर्वापि ॥ १० ॥

नवधेत्युदिताङ्गुलिप्रभेदा नवधा तत्र कराः स्युरुत्तमाद्याः ।
अथ तेऽङ्गुलिवृद्धितोऽष्टधोक्तैः करभेदैः सहिता द्विसप्ततिः स्युः॥

आदौ चतुर्विंशतिसंमितैर्यो मात्राङ्गुलैरुक्तकरः स एव ।
सर्वत्र पूज्यो मतभेदतोऽन्ये सर्वेऽपि च क्वापि यथार्हमिष्टाः ॥

हस्तेनैव गृहाद्यमुक्तमुदितं कुत्रापि मात्राङ्गुलै-
र्त्यावश्यकतो यवैरपि परीणाहं च गत्यादि च ।

---

१. 'नुग्रह' क. ख. पाठः.

मानुष्येषु तु बाह्यगेहगतिनिष्ठादौ चतुर्हस्तको
दण्डो यष्टिरिति स्मृतोऽष्टगुणितो दण्डोऽत्र रज्जुर्भवेत् ॥१३॥

तालाद्यैः प्रतिमादिकं खलु यवैर्मेयं च भूषादिकं
वस्त्रप्रावरणांशुकादि परिमेयं स्याद् वितस्त्या तथा।

शस्त्राद्यं तदनामिकाङ्गुलियुगेनैवं च तद्व्यासतो
मुष्ट्या याज्ञिकभाजनादि यजमानस्यान्यदङ्घ्र्यादिना(म् ?)॥

द्विजभवनादिबहुत्वाद् ग्रामाद्याः सम्भवन्ति बहुभेदाः।
उत्तममध्याधमतो मानविशेषैश्च सम्भवेदेषाम् ॥ १५ ॥

योजनमितचतुरश्रं भूभागं ग्राममुत्तमं प्राहुः।
मध्यममर्धप्रमितं *प्रायशोऽधमं ग्रामम् ॥ १६ ॥

नगरस्य सहस्रादि द्विसहस्रान्तं च दण्डमानं स्यात्।
पत्तनसंज्ञं तद्वत् पोतान्वितवारि(नि)धितटोपेतम् ॥ १७ ॥

पुरमिति नरवरभवनप्रधानमाहुर्वणिग्जनादियुतम्।
नगरं राजवरालयसकलजनागारमण्डितं विदितम् ॥ १८ ॥

एकविप्रवरागारतत्कुटुम्बसमन्वितम्।
एकभोगं भवेद् ग्रामं तद्भृत्यायतनावृतम् ॥ १९ ॥

ग्रामाद्यखिलं द्विजभवनादिबहुत्वादनेकधा ज्ञेयम्।
मानविशेषैरुत्तममध्याधमसंज्ञितं च सम्भवति ॥ २० ॥

उत्तरयुगबाह्यान्तो मन्दिरविस्तार एव देवगृहे।
श्रेष्ठो दण्डस्तद्वज्जगति प्रान्तावसानिको मध्यः ॥ २१ ॥

---

* इह 'तदर्धकम्' इत्यपेक्षितं भाति।

पादुकयुगलावधिको दण्डः प्रोक्तोऽधमः सुरागारे ।
प्रासादाद् बहिरेतैर्मर्यादाः पञ्च तत्र कल्प्याः स्युः ॥ २२ ॥

यानाङ्गादिषु केतुरेव विहितः सर्वत्र शस्तो ह्ययं
पर्यङ्कादिषु कुञ्जरो मृगपतिः पीठासनादौ हितः ।
भाण्डे कूपतटाकपञ्जरविधौ योनिर्वृषो वा ध्वजो-
ऽथाश्वत्थादिसमस्तकुट्टिमविधौ केतुर्विधेयः सदा ॥ २३ ॥

अन्तर्योनिर्मानपात्रादिवापीकूपादीनामङ्गणे गर्भगेहे ।
तुर्यश्चागारोत्तरव्यासमध्ये कुत्राप्युक्तोऽन्यत्र सर्वत्र बाह्ये ॥

इष्टातानवितानमाननिचये त्रिघ्नेऽष्टभिर्भाजिते
शेषो योनिरिह व्ययो मुनियुजाथायोऽष्टनिघ्नेऽरुणैः ।
ऋक्षैर्ऋक्षमवाप्तिरत्र तु वयो ज्ञेयं तिथिस्त्रिंशता
वारो भूमिधरैर्निधिप्रगुणिते धर्माहते वा व्ययः ॥ २५ ॥

ध्वजधूमसिंहकुक्कुरवृषखरगजवायसाः क्रमेण स्युः ।
प्रागादियोनयोऽष्टौ तेष्वयुजः सम्पदे युजो विपदे ॥

केतुयोनिरभिवाञ्छितार्थदः
सात्त्विकोऽमरगुरुर्द्विजो भवेत् ।
पूर्वदिक्ष्वभिहितोऽपि सर्वदा
सर्वदिक्ष्वविहितो विशेषतः ॥ २७ ॥

सिंहो दक्षिणदिक्स्थितः क्षितिसुतो लक्ष्मीप्रदस्तामसो
भूपोऽथो वणिगुत्तरे शुभकरो दन्ती बुधो राजसः ।

शूद्रः पश्चिमदिक्स्थितोऽर्कतनयो धान्यप्रदस्तामसः
सम्प्रोक्तोऽथ विदिक्षु ये निगदितास्तत्रापि ते निन्दिताः ॥

उद्वेगः स्याद् धूमे शुनि कलहश्चपलता खरे भवति ।
ध्वाङ्क्षे कुलहानिः स्यात् सर्वविदिग्योनयस्ततो निन्द्याः॥२९॥

प्राच्यां केतुर्विधेयः स तु भवति विधानेषु सर्वत्र नित्यं
शालायां दक्षिणस्यां मृगपतिरुदितः केतुयोनिश्च योज्यः।
मातङ्गः केतुसिंहावपि च धनपतौ पश्चिमे स्याद् वृषोऽन्ये
केतुः सिंहो गजश्चापि च निजनिजकोणालयेऽप्येवमेव ॥

योनिः प्राणा एव धाम्नां यदस्माद्
ग्राह्यस्तत्तद्योग्ययोनिप्रभेदः।
मृत्युर्वर्ज्यः सर्वगेहेष्ववश्यं
सर्वव्यापत् प्राप्यतेऽस्मिन् गृहीते ॥ ३१ ॥

आयाधिक्यं व्ययतः सम्पाद्यं सर्वथान्यथापत्तिः ।
नक्षत्रादिशुभत्वं ज्योतिःशास्त्रादिभिः सुविज्ञेयम् ॥ ३२ ॥

बालत्वं कौमारं यौवनमथ वार्द्धकं च निधनं च ।
पञ्च वयांस्येष्वन्त्यं नेष्टं शिष्टानि वास्तुनीष्टानि ॥ ३३ ॥

द्वेधा योनिश्चतुर्धा व्ययविधिरुदितश्च द्विधायो वयश्चा-
प्यृक्षं विप्रादिवर्णास्तिथिरपि च तथा राशयो द्विप्रकाराः।
त्रेधा वारो ध्रुवादिस्त्रिविध इति विकल्पेन योन्यादयः स्युः
प्रोक्तेष्वेतेषु पूर्वोदितमखिलमतं कार्यमावश्यकेऽन्यत् ॥३४॥

सामान्यं परिणाहतः सुविहिता योन्यादयो दीर्घतो
विस्तारेण च पादमानचरणाधिष्ठानतुङ्गैरपि ।

विस्ताराहतदैर्घ्यतोऽपि च पृथक् स्वस्वोक्तयोन्यादयो

जाताश्चेदतिशोभना गृहविधौ पक्षान्तरोक्तैरपि ॥ ३५ ॥

सर्वागारे प्रधानोत्तरपरिधिवशाद् दीर्घविस्तारतुङ्ग-

स्तम्भाधिष्ठानगर्भालयमितिविधयो द्वारबिम्बादयोऽपि ।

आरूढाद्युत्तरं च द्वितलविधिसमस्ताङ्गभेदा विकल्पे-

नोक्तैरंशैश्च कार्या यदि निकटगता योनिभेदाश्च योज्याः ॥

गेहे क्षेत्रफलं वितानिहतायामं विदुश्चेष्टदिग्-

योनिर्यन्मितदीर्घविस्तृतिविधानादत्र पूर्णो भवेत् ।

तावद्विस्तृतिदीर्घमानमभिकल्प्य प्रागथो नाहवत्

सर्वं कल्पयतु व्ययादिकमिदं त्वभ्यन्तरव्यापि हि ॥ ३७ ॥

पूर्वं त्रिघ्नचतुर्दशाप्तपरिधेः सामान्यमुक्तो व्ययो

नन्दघ्नेऽष्टहते च पङ्क्तिविहते शिष्टो व्ययो वा भवेत् ।

सिद्धर्क्षे वसुभाजितेऽपि च चतुर्धेति व्ययः सर्वथा-

स्याल्पत्वं परिकल्प्यमात्मजधनादीनां विनाशोऽन्यथा ॥

स्वत्र्यंशेन युते तथेक्षणहते नाहेऽष्टभक्ते भवे-

दायो वा पुनर्ऋक्षनिघ्नपरिधौ दिग्द्वन्द्वभक्ते वयः ।

बालत्वादिविशेषमात्रमवगन्तव्यं फलैः शेषत-

स्तेषामेव गताब्दमानमिह तारुण्यं वयः शोभनम् ॥

नन्दघ्ने परिधौ च केवलपरीणाहेऽथवा त्रिंशता

भक्ते तत्र विकल्पपक्षयुगले प्राग्वत् तिथिः शिष्यते ।

त्रिघ्नेऽङ्कादिहतेऽथवार्णवहते नाहे द्विजाद्याः क्रमाद्

वर्णाः स्युर्निगमाहते वसुहते वार्काहते राशयः ॥ ४० ॥

---

१. 'ल्य' क. ख. पाठः.

केवलनाहेऽद्रिहृते त्रिघ्ने नाहे च शिष्यते वारः ।
द्विघ्ने वा त्रिघ्ने वा नाहे नृपभाजिते ध्रुवाद्याः स्युः ॥ ४१ ॥

क्षेत्रफले व्ययुक्ते नृपभक्ते वा ध्रुवादयः शिष्टाः ।
ध्रुवधान्यजयविनाशाः खरकान्तमनःप्रसादसुमुखत्वम् ॥ ४२ ॥

सौमुख्यासौम्यत्वे विरोधवित्तोद्भवक्षयाक्रन्दाः ।
वृद्धिजयौ च क्रमशः संज्ञातुल्यं फलं भवेदेषाम् ॥ ४३ ॥

इति मनुष्यालयचन्द्रिकायां मानभेदयो-
न्यायव्ययादिनिर्णयो नाम
तृतीयोऽध्यायः ।

---

## अथ चतुर्थोऽध्यायः ।

स्वाभीष्टालयदीर्घमङ्गणविधिं तेषां पृथङ् नाहतो
योन्यायर्क्षवयोव्ययादि शुभदं सर्वप्रकारादपि ।
सम्पाद्याथ गृहेऽष्टदीर्घगुणविस्तारादिभेदान् पृथग्
दीर्घव्यासमितिं करोतु च यथात्राल्पान्तरालं सुधीः ॥ १ ॥

इष्टाद् दीर्घात् सर्वधाम्नां च नाहो
विस्तारोऽस्माद् विस्तृतेः पादमानम् ।
तस्मान्मासूरं च तच्छेषतः स्यात्
स्तम्भः स्तम्भाद् विस्तृतिश्चोत्तराणाम् ॥ २ ॥

---

१. 'वघनघा' ख. पाठः

तत्तदुत्तरविस्ताराल्लुपानीप्रादिविस्तृतिः ।
उत्तरादेर्बनं तत्तद्विस्तारादेव कल्प्यते ॥ ३ ॥

षड्ढस्तादिनिजेष्टदीर्घकरसङ्ख्याने ऽष्टनिघ्ने स्वदिग्-
योन्याढ्ये सति तत्त्रिभाग इह तद्गेहस्य नाहो भवेत् ।
व्यत्यासक्रियया भवेदपि च तद्दीर्घोऽथ नाहेऽर्धिते
दीर्घोने परिशिष्यतेऽत्र विततिः सर्वत्र मर्त्यालये ॥ ४ ॥

स्वाभीष्टदीर्घहस्ते द्विघ्ने सति तत्त्रिभागसंयुक्ते ।
स्वाभीष्टयोनिसङ्ख्यात्र्यंशयुते नाह इति च सम्भवति ॥ ५ ॥

नाहाङ्घ्र्यंशेन दीर्घो विततिरपि भवेत् तुल्यवेदाश्रगेहे
नाहार्धे नन्दभक्ते विततिरुदधिभागैश्च दीर्घो विशिष्टैः ।
स स्यात् पादाधिकोऽर्धाधिक इह परिणाहेऽर्धिते दिग्विभक्ते
षड्भिर्दीर्घश्चतुर्भिर्विततिरिति सुरागारयोग्यास्त्रयोऽमी ॥ ६ ॥

पादाधिको मनुजसद्मनि गृह्यते त-
त्रावश्यके समततायतिकोऽपि कैश्चित् ।
अर्धाधिकोऽत्र न हितो मुनिभिः समस्त-
पादोनतापि कथिताखिलनाशिनीति ॥ ७ ॥

नाहार्धे द्वादशाद्यैस्त्रिभिरपि च विभक्तेऽथवा षोडशाद्यै-
र्विंशत्याद्यैश्च तत्त्वादिभिरपि मनुयुग्मादिभिर्दन्तसङ्ख्यैः ।
तत्तत्तुर्यप्रहीणैरथ विततिरुदध्यंशतः शेषभागै-
र्दीर्घो वस्वङ्कपङ्क्त्यादिभिरपि गुणविस्तारमाहुर्मुनीन्द्राः ॥ ८ ॥

नाहार्धे शिवभक्ते विततिस्त्रिभिरष्टभिश्च दीर्घो वा ।
दीर्घार्धादधिकतरं व्यासं नेच्छन्ति गर्गदक्षाद्याः ॥ ९ ॥

चत्वारोऽत्र तु दिग्गृहाः पृथगथो कोणालयाश्चैवमि-
त्यष्टावेव नृणां गृहा मुनिमताः संस्थानभिन्नास्ततः ।
भिद्यन्ते नवधोत्तरस्य गतिभिर्मानेन नामादिभि-
श्चैतेषां द्वितलादिलक्षणविधौ मानानि तान्येव च ॥ १० ॥

भिन्नाभिन्नवशाद् द्विधैव विदिता शालात्र भिन्ना पृथग्
दिक्स्था स्वाङ्गविशेषपूर्णविभवा कोणालयासम्भवात् ।
अन्तर्बाह्यभवोत्तराभिमिलनादेकीभवेत् कोणगे-
हापर्यन्तलसद्ध्वजो भवति यत्राभिन्नशालैव सा ॥ ११ ॥

शालास्त्वन्योन्यभिन्ना निजविहितगतिव्यासयोन्यादियुक्ताः
पर्युद्यत्पत्रमानावधिनिहितलसत्पादुकाभिन्नशालाः ।
सर्वार्हास्ता विशेषादवनिसुरहिताः कोणवेश्मप्रहीणा-
स्तत्रापि प्राङ्गणं केतुजमिति विदिता भिन्नशाला विशुद्धाः ॥

मित्रे दक्षिणपश्चिमे पुनरुदक्प्राच्ये च गेहे मिथ-
स्तस्मात् तद्युगलोत्थकोणनिलयः शेषो विधेयोऽपि च ।
अन्यत् कोणयुगं तथैकमथवा न श्लेषयेत् सूतिका-
शूद्राद्यागमनिष्क्रमार्थमुदितो मार्गोऽयमेवात्र तु ॥ १३ ॥

एकद्वित्रिककोणश्लेषवशाच्छिष्टभिन्नशाला स्यात् ।
धरणीदेवहिता साप्यखिलार्हा भिन्नमिश्रभावेन ॥ १४ ॥

दिग्गेहोत्तरपृष्ठसंहितविदिग्गेहोत्तराणि क्रमा-
न्नन्द्यावर्तपदप्रदक्षिणगतीन्यातत्य संयोजयेत् ।
अन्तःस्थोत्तरयोगनाहमिह सर्वत्रापि केतूद्भवं
बाह्यस्थं च तथैव चेदतिशुभं संश्लिष्टभिन्ना त्वियम् ॥

१. 'इमं' क. ग. पाठः.

सर्वत्रापि च कोणगेहपरिणाहाप्त्यै स्वदिग्योनिरे-
वोक्तस्तत्र विदिग्गृहास्तु सकला जन्या भवन्त्येव हि ।
दिक्शालाजनका भवन्ति च ततः केतुर्भवेदीश्वरे
सिंहोऽग्नौ निर्ऋतौ वृषः करिवरो वायौ नृणां धामनि ॥ १६ ॥

एवं संश्लिष्टभिन्नालयविधिवद्थाकल्प्य सर्वोत्तराणि
स्वोक्तैर्दिग्योनिभिश्चैव च परिधिमुपादाय कोणालयानाम् ।
दिग्गेहान्तान्तराले पृथगपि च महाद्वारमध्यं विनान्य-
त्रादध्यात् कोणगेहोत्तरमपरिमितिश्लिष्टभिन्नाष्टशाला ॥

कोणगृहोत्तरयोगः सन्धिमृते दिग्गृहोत्तरान्तेषु ।
यत्र स्यात् तत्र भवेद् भिन्नत्वं तद्गृहाश्चतुर्धेति ॥ १८ ॥

दीर्घव्यासाद्यभावे पृथगथ विधिवत् सन्ति कर्मोक्तनीत्या
सन्धायाकोणगेहावधि बहिरुदितान्युत्तराण्यत्र धीमान् ।
आधारीकृत्य पूर्वापरनिलयबहिष्ठोत्तरस्याग्रमूला-
वाधेयत्वेन चान्यद् द्वितयमिति चतुष्कोणसन्धिं विधाय ॥

नाहं केतुजमेवमत्र बहिरप्यन्तश्च कृत्वा विदिग्-
गेहान्तर्विहितोत्तरैर्विरहितं त्वन्तःस्थकोणेष्वपि ।
सन्दध्याद् बहिरुत्तरोक्तवदिदं स्यान्मिश्रभिन्नं चतुः-
शालं दिङ्निलयाः स्वयोनिगतिभिर्युक्ताः समस्ता अपि ॥

कोणेषु सर्वनिलयोत्तरयोगभेदा-
न्मिश्रत्वमत्र तु विदिग्गृहहीनभावात् ।

दिङ्मन्दिराणि निजयोनिगतिप्रभेदै-
र्युक्तान्यमूनि यदतोऽपि च भिन्नतात्र ॥ २१ ॥

पर्यन्तध्वजमादधीत बहिरप्यन्तश्च तत्पत्रमा-
नान्तश्चाङ्गणनाहमप्यथ बहिर्नाहं च दिग्धामसु ।
कोणागारगतोत्तरान्तरुदितं नाहं च केतूद्भवं
युक्त्या तूत्तरविस्तृतिं च जनयेत् संमिश्रभिन्नालये ॥

मानाद् बाह्यान्निजेष्टाद् रहयतु मितिमाभ्यन्तरीं शेषमानात्
कोणाब्ध्यश्रोदरोद्यङ्कुजमपि शितधीरष्टनिघ्नं विजह्यात् ।
तच्छेषादुत्तराणामपि जनयतु विष्कम्भमष्टघंशतोऽमू-
न्यापर्यन्तायतान्याकलयतु च चतुर्दिक्षु बाह्यान्तराणि ॥

प्राग्वत् प्राङ्गणपत्रमानबहिरन्तर्नाहकोणालया-
केतूत्था हि दिगालयास्तु निजयोन्याढ्याः सगर्त्यन्विताः ।
राजार्हं तदपीह मिश्रकचतुःशालं नृगेहं विदु-
र्दिक्शाला निजयोनिजा यदखिलार्हं तद् द्विजेष्टं न वा ॥

तुल्यातानवितानताङ्गणविधौ गत्या विनान्तर्बहि-
र्योगे तूत्तरपत्रमानपरिणाहोऽप्यस्तु केतूद्भवः ।
केतूत्था अपि दिग्विदिङ्निलयनान्तर्बाह्यनाहाः स्वम-
ध्योद्यद्द्वारपदा भवन्ति च चतुःशालं गृहं भूभुजाम् ॥

क्वचिच्चतुःशालगृहे समस्ते सर्वोत्तराणामपि मध्यसूत्रे ।
नाहो विधेयो यदि तत्तु मध्यप्ररूढमानं भवनं वदन्ति ॥

---

१. 'त्या' क. पाठः,

एकं स्याद् यदि दक्षिणं गृहमुखे चेत् तच्च पाश्चात्त्यकं
ते सौम्यं च गृहत्रिके गृहचतुष्के प्राच्यमेतानि च ।
वाञ्छन्ति क्वचिदेकमेव भवनं यद्यत्र पाश्चात्त्यकं
चेष्टं गेहयुगादिनिर्मितिविधौ प्रागुक्तवत् कल्प्यताम् ॥

प्राक्शालारहितं गृहत्रिकमथो सुक्षेत्रमत्यृद्धिदं
चुल्लीदक्षिणमन्दिरेण रहितं तद् वित्तहानिप्रदम् ।
ध्वंसः पश्चिमशालया विरहितं पुत्रक्षयारिप्रदं
सौम्योनं तु हिरण्यनाभमिति[1] तद् वित्तप्रदं सर्वदा ॥

प्राक्पाश्चात्त्यविहीनके कलहमुद्वेगं च कोञ्चाभिधे[2]
याम्योदग्रहितेऽर्थसिद्धिरुदिता सिद्धार्थकाख्ये द्विके ।
प्रागादिद्वितयोनिते क्रमवशान्मृत्युं भयं विक्रमं
चार्थाप्तिं प्रवदन्त्यतः क्रमवशाद् याम्यादिकं कल्पयेत् ॥

इति मनुष्यालयचान्द्रिकायां गृहाणामिष्टदीर्घपरिणाहदीर्घ-
विस्तारशालाभेदादिनिर्णयो नाम
चतुर्थोऽध्यायः ॥

---

## अथ पञ्चमोऽध्यायः ।

कुर्याद् गृहाय कृतवास्तुपदं समस्तं
मातङ्गभास्करनृपाङ्गुलमात्रतुङ्गम् ।
बाह्यान्तराङ्गणगतान् गमनाय मध्य-
निम्नत्वदोषविरहाय च मृच्छिलाद्यैः ॥ १ ॥

---

१. 'नाभिरिति' क. ख. पाठः. २. 'कोपाभि' ग. पाठः.

रक्षाशोभोच्छ्रयार्थं सकलनिलयमासूरतोऽधः समन्तात्
कुर्यादेकद्विहस्तप्रविततमुपपीठं गजाद्यङ्गुलाढ्यम् ।
अन्तर्भागे तु गर्ताङ्गणमथ वृषजं केतुजं वायताढ्यं
दिश्यैशान्यामथोदङ्मुखमपि रचयेत् प्राङ्मुखं वाम्बुमार्गम् ॥

गेहाधिष्ठानोच्चतुल्यो रसाद्य-
ष्टाङ्काशांशैरूनितो वा यथेष्टम् ।
मर्त्यागारस्योपपीठोच्छ्रयः स्यात्
तत्तद्भागैः पादुकाद्यं विधेयम् ॥ ३ ॥

गर्तप्राङ्गणतारतोऽधिककृतायामार्धमप्युत्तरे
निक्षिप्यार्धमवाक् च मध्यचतुरश्रेष्टाष्टकोष्ठात्मके ।
मल्लीकुट्टिममापसंज्ञपदयोः कुर्यात् पदे दक्षिणे
यद्वा तत्पुनरापवत्सपदयोश्चोदक्पदेऽन्तर्वृतौ[1] ॥ ४ ॥

केतूत्थं तुल्यताराततिजलनिधिकोणं च वस्वष्टिकोणं
वृत्तं वा सोपपीठाद्यवयवसहितं कैरवाद्यन्वितं वा ।
गेहाधिष्ठानतुङ्गं कुहचिदपि तदूर्म्यादिरुद्रान्तभागै-
र्हीनं वा रज्जुवेधाद्यपगतमुदितं मल्लिकाकुट्टिमं तत् ॥ ५ ॥

उपपीठोच्चसमोच्चा मासूरोपानहं करोतु दृढम् ।
तदुपरि परितः पादुकमथ कुर्यादुक्तपत्रमानान्ता ॥ ६ ॥

सर्वत्रोत्तरबाह्यपार्श्वविहिताल्लम्बाद् बहिः कुट्टिम-
स्याष्टाष्टाङ्गुलनिष्क्रमो य उदितस्तत् पत्रमानं विदुः ।

१. 'न्तर्विंतौ' ख. पाठः.

यद्वा तद्द्विगुणं च तत्त्रिगुणितं वा तद्विधेयं तथ-
वाचाच्युत्तरयोः षडङ्गुलमदो द्वन्द्वं प्रतीच्यां क्वचित् ॥ ७ ॥

तत्पत्रमानमसमं च समं च बाह्ये-
ऽप्यन्तश्च तद्विहितयोनिकनाहयुक्तम् ।
मर्त्यालयेषु विहितं सुरमन्दिरान्त-
हाराप्रदीपनिलयेषु च गोपुरेषु ॥ ८ ॥

प्राहुर्गेहचतुष्कपादुकबहिर्भागं बुधाः प्राङ्गणं
याम्योदग्विहितायतं च चतुरश्रं केतुयोन्यन्वितम् ।
भूम्यश्वाम्बुधिनागरन्ध्रदिननाथाष्टद्विसङ्ख्याङ्गुलै-
रेकद्वित्रिकरैस्तथैव गुणविस्तारादिभिर्वायतिः ॥ ९ ॥

सूत्रैः प्राङ्गणगेहमध्यविहितैरन्योन्यविद्धैर्भवेत
तद्गेहस्थितपुत्रपौत्रविलयस्तस्माद् गृहाणां क्रमात् ।
कर्तव्यं गमनं प्रदक्षिणतया प्रागादितो वह्निर-
न्ध्राद्रीष्वङ्गुलकैः स्वयोनिजनकैरावश्यके वा यवैः ॥

गत्यङ्गुलानि निजदिग्विहितानि यानि
तान्यष्टतद्विगुणितत्रिगुणाङ्गुलैश्च ।
युक्तानि तद्दिगुचितानि भवन्ति यत् त-
दल्पान्तरालनिलयादिषु तानि युञ्ज्यात् ॥ ११ ॥

दिक्कोणालयभेदकृन्ति च भवन्त्यष्टान्तरालानि तद्-
बाहुल्यं तु धनक्षयाय हि भवेदल्पल्पता व्याधये ।
मृत्युर्भित्तिविरोधनेऽन्तरविहीनत्वादतः प्रायशो
नेष्टं गेहरसांशतोऽधिकतरं द्वित्र्यङ्गुलोच्चोनितम् ॥ १२ ॥

नृणां धामनि पादमानमुदितं स्वस्वोत्तरोपानहो-
मध्यं साङ्घ्रिकरत्रिकोन्मितमिदं त्वल्पालये दृश्यते ।
गेहव्याससमं तदर्धसहितं व्यासाब्धिषट्सप्तव-
स्वङ्काशांशयुतं च तैर्विरहितं चैवं मुनीन्द्रा जगुः ॥ १३ ॥

भक्तेऽस्मिन् पादमाने गुणचतुरिषुषट्सप्तनागाङ्कदिग्भि-
स्तेष्वेकांशो भवेत् कुट्टिममपि च तथेध्मांशिते वा रसांशः ।
नन्दद्वन्द्वैः शरांशो दिनकरयुगभक्तेऽद्रिभागो मुनीन्द्रै-
र्द्व्यंशं तिथ्यंशिते स्याज्जलधिपरिमितो विश्वभक्तेऽपि चैवम् ॥

मासूरमानानि चतुर्दशैवं भवन्ति तेभ्यः पृथगूनिताश्चेत् ।
रसाद्रिनागाङ्कदशेशभागाश्चतुर्युताशीतिमितानि सन्ति ॥ १५ ॥

इष्टाधिष्ठानमाने नवभिरथ विभक्ते त्रिभिः पादुकोच्चं
षड्भिः कुर्याज्जगत्युच्छ्रयमथ नयनाद्यंशकैर्वा क्रमेण ।
द्वेधैवं मञ्चकं स्यात् प्रतिगलरहितं सर्वतः पादुकस्य
स्वोच्चाङ्घ्र्यूनार्धवद्व्यंशत इह शरभक्ते त्रिभिर्निष्क्रमो वा ॥

रसांशिते वाञ्छितकुट्टिमोच्चे प्रकल्पयेत् पादुकमेकतोऽथ ।
त्रिभिर्जगत्युच्छ्रयमेकतस्तद्गलं प्रतिं तद्वदिहैकतोऽपि ॥१७ ॥

सायकांशिनि तु कुट्टिमोच्छ्रये पादुकोच्छ्रयमिहैकभागतः ।
द्व्यंशतोऽथ जगतीं गलं प्रतिं चैकतो विरचयेदथेति वा ॥

देवेन्द्रांशिनि कुट्टिमे द्वितयतः सम्पादयेत् पादुकं
षड्भागैर्जगतीगलाङ्घ्रमिलया कुर्यादधो वाजनम् ।
अश्विभ्यां गलमूर्ध्ववाजनमवन्यंशेन नेत्रांशतः
प्रत्युच्चं गलमञ्चकाभिधमिदं सद्वाजनं भूतिकृत् ॥ १९ ॥

१. 'मश्चका' ख. पाठः.

एवं त्रिधोक्तं गलमञ्चकाख्यं प्रतिर्जगत्या समनिष्कमेव ।
तेषां गलान्तर्गमनं गलोत्सेधाङ्घ्र्यंशतः स्याद् गलमञ्चकानाम् ॥

कृत्वाधिष्ठानमेवं दृढतरमथ तच्छोपितं पादमानं
विद्यादङ्घ्र्युच्चमस्मिन्नृतुतुरगभुजङ्गाङ्कपङ्क्तीशभक्ते ।
एकांशेनान्वितं वा विरहितमथवेतीप्सिताच्चाङ्घ्रिदीर्घा-
दोमासंज्ञाङ्घ्रिपीठोच्चयमपनयता पोतिकाया घनं च॥२१॥

विन्यस्येत् पादपीठं सुदृढतरशिलासारदारुप्रकॢप्तं
मासूरोपर्यथाब्ध्यश्रकवसुनृपकोणं क्वचिद् वर्तुलं वा ।
स्तम्भाधोभागकर्णोन्मितविततदर्धोच्छ्रयं वा तदङ्घ्र्य-
ग्र्यर्धांशोनं च पद्मोपममपि कुहचिद् वाजनाद्यन्वितं च ॥

स्तम्भाः स्वविस्तारहुताशभागप्रकॢप्तमूलाग्रशिखासमेताः ।
स्थाप्या यथार्हं निजपीठिकोर्ध्वे तद्गर्तसंलग्नशिखाः समस्ताः ॥

स्तम्भोच्चाब्धीषुषड्भूधरवसुनवदिग्रुद्रभागैकतः स्यात्
स्तम्भाधोविस्तृतिस्तद्वसुनवदशरुद्रांशहीनोग्रतारः ।
दण्डो[2]प्यश्रायमेतेन च कुहचिदथो मीयते दारुकॢप्तौ
कुड्यस्तम्भाग्रतारोऽप्यथ तदवयवाकल्पने दण्डसंज्ञः ॥

स्तम्भास्तन्मूलतारश्रुतिमितचतुरश्रोर्ध्वभागाः समस्ता
मूलेऽप्यर्धाग्निवेदाशुगरसततिकर्णोन्मिताब्ध्यश्ररूपाः ।
मध्ये व्यास[3]श्रुतिप्रोन्मितकृतचतुरश्रास्तदूर्ध्वाधरोद्यद्-
वस्वश्राः सर्वतो वर्तुलनृपवसुकोणाश्च यद्वा विधेयाः ॥ २५ ॥

---

१. 'पत्यथा' ख. ग. पाठः. २. 'ण्डाप्यश्रा' क. पाठः. ३. 'वास' ख. ग. पाठः.

वृत्तादयस्ते चरणास्त्रयोऽमी मध्यादधस्ताच्चतुरश्रका वा ।
यद्वा वितानश्रवणोपक्लृप्ततुर्यश्रमूलाश्च तथा विधेयाः ॥ २६ ॥

अत्युच्चेऽङ्घ्रौ तु तत्तत्यधिचरणदलद्विघ्नविस्तारमासू-
रोच्चोच्चाध्यर्धतुङ्गं रचयतु चरणं कुत्रचिन्मध्यतोऽधः ।
कुर्यादेवं शिलाभिः प्रणिगदितसुधाभेदसंमेलिताभि-
र्यद्वा सारेष्टकाभिः क्वचिदखिलसमुत्सेधमर्धोच्छ्रयं वा ॥

एकं वाजनमुत्तरस्य यदि तत् स्तम्भान्तराब्ध्यश्रकं
नेष्टं संमतमल्पवाजनयुते पत्रान्विते चोत्तरे ।
स्तम्भा मौक्तिकदामशुण्डवलयाद्याढ्यास्तथेष्टास्तयो-
र्गेहाङ्गं च समस्तमुत्तरवशादूर्ध्वाधरस्थं भवेत् ॥ २८ ॥

स्तम्भाग्रोत्तरतारयोगदलविस्तारं तथा स्तम्भम-
ध्योद्यद्व्यासततां च तद्दलघनां रूपोत्तरे पोतिकाम् ।
स्तम्भाग्रोदितदण्डवह्न्युदधिबाणायामिनीं वोत्तर-
व्यासत्रिघ्नसमायतां कलयतु स्तम्भे लसद्वाजनाम् ॥ २९ ॥

पत्रोत्तरे चेद् विततांङ्घ्रिहीनतीव्रा विधेया खलु पोतिकेयम् ।
खण्डोत्तरे तुल्यवितानतीव्रा सर्वाश्च सर्वेषु यथोपशोभम् ॥ ३० ॥

स्तम्भाधस्तारभेदप्रकथनविधिनैवोत्तराणां च तारं
स्वाभीष्टं कल्पयेद् वा वसुवसुयुगलार्कोर्मिसङ्ख्याङ्गुलैर्वा ।
श्रेष्ठं खण्डोत्तरं तद्वितृतिसमघनं मध्यमं पत्रसंज्ञं
पादोनोच्चं कनिष्ठं विततिदलघनं तत्तु रूपोत्तराख्यम् ॥

---

१. 'ण्डु' क. ख. पाठः.

उत्तरविस्तारघने व्यत्यस्यापि प्रकल्पयेत् क्वापि ।
तत्र तु चूलीति मता तस्यामेवार्पयेत लुपाः ॥ ३२ ॥

एक एव यदि वाजनं भवत्युत्तरस्य शरभाजिते घने ।
उच्चमंशयुगलेन निष्क्रमोऽप्यस्य पट्टमवशिष्टभागतः ॥ ३३ ॥

अल्पवाजनयुतोत्तरे घने नागभागिनि महत् त्रिभागतः ।
एकतोऽल्पमुभयोश्च निष्क्रमः स्वोच्चतो भवति पट्टमब्धिभिः ॥

बाणांशिन्यखिलोत्तरस्य तु घने द्वाभ्यां महद् वाजनं
　चैकेनाल्पमथातनोतु महितं पट्टं च शिष्टांशतः ।
अब्ध्यादीश्वरपश्चिमांशिनि घने सर्वोत्तरस्यैकतो
　युक्त्या वाजनयोश्च निष्क्रममथान्यत्रापि चैवं विधिः ॥

स्तम्भमूर्धनि निधाय पोतिकामुत्तरं तदुपरि प्रकल्पयेत् ।
पोतिकाविवरतः समुद्गतस्तम्भमस्तकशिखाहितावटम् ॥ ३६ ॥

अथोत्तरोच्चोच्चतदर्धतारां क्षुद्रोत्तराख्योत्तरपट्टिकां च ।
सङ्कीलयेदुत्तरबाह्यपश्चादूर्ध्वे दृढैः स्वोचितदारुकीलैः ॥ ३७ ॥

कीलास्ते कूटसूत्रेष्वखिलनिलयमध्येऽपि च द्वारमध्ये
कर्तव्यास्ते समस्ता यवमितगतिभिः सूत्रतोऽतीतमध्याः ।
युक्त्या पङ्क्तिं लुपानां सममपि परिकल्प्याथ मध्ये च तासां
कार्याः कीलास्त्वयुग्माः खलु सकललुपायुग्मसङ्ख्या विधेयाः ॥

एकाङ्घ्र्यूनादिदण्डोच्छ्रयमुपरि निधायोत्तरे वाजनं प्राक्
　तिर्यग्दण्डोच्छ्र्याङ्घ्र्यूनितबहलतुलास्तासु वंशानुवृत्त्या ।

१. 'हे त्रि' ग. पाठः. २. 'त' क. पाठः.

स्वार्धाक्रान्ता जयन्ती तदुपरि सुसमीकृत्य कृत्वानुवंशं
निश्छिद्रं छादयेत् स्वोचितघनफलकाप्रस्तरेणोर्ध्वभागम् ॥

यद्वा कपोतवलभीविलसत्तुलोलु-
पोद्यत्पिधानफलकादितुलाविशेषैः ।
युक्तं च खण्डफलकादिविचित्रचित्र-
मूर्तिप्रभेदसहितं महितं विदध्यात् ॥ ४० ॥

इति मनुष्यालयचन्द्रिकायां
पञ्चमोऽध्यायः ।

---

## अथ षष्ठोऽध्यायः ।

अल्पे धामनि बाह्यमेव महति त्वारूढमप्युत्तरं
विष्कम्भे तनुयात् स्वगेहविहितैर्योन्यादिभिः संयुतम् ।
वस्वृष्यर्कयुगाङ्गुलादिगतिरन्तः स्यादलिन्दं तु तत्
तावत् स्वोच्छ्रयमस्य कर्णसदृशी विष्कम्भपादायतिः ॥ १ ॥

विष्कम्भपादं तु तदङ्गभेदैर्युक्तं तथा कल्पलतादिचित्रैः ।
महातरङ्गान्तरुदीर्णचूचुक(प्र ? )सूनसंशोभितमातनोतु ॥ २ ॥

कुर्यादुत्तरपङ्क्तोऽखिललुपालम्बं तदौचित्यतः
स्तम्भोच्चे शरभाजिते द्वितयतो यद्वाङ्कभक्तेऽङ्घ्रिभिः ।
अद्र्यंशिन्युरगांशिते च हुतभुग्भागैस्तथाङ्घ्र्युच्छ्रय-
त्र्यंशार्धांशत एव वाभिलषितं षोढोदितेष्वेषु तु ॥ ३ ॥

लम्बोऽयं विहितादधस्थचरणोच्चेऽङ्गादिरुद्रान्तिमै-
र्भक्ते तेष्विलया युतो विरहितो वाङ्घ्र्युच्चविध्यध्वना ।
यद्वा चन्द्रादिगग्निवारिधिशरोर्म्यद्र्यङ्गुलैरूनितो
लम्बोऽसौ क्वचिदन्वितोऽप्युभयतस्तुल्योऽप्यतुल्योऽथवा ॥

विस्तारेण घनेन वापि च लुपालम्बो भवेदुत्तर-
स्यैकेनाधिदलद्वयत्रयचतुर्बाणोर्मिशैलोन्मितैः ।
योगे सत्यपरालयैरपि लुपाच्छेद्याश्च नीप्रादयो
गेहाङ्गेष्वखिलेषु चोत्तममतो नच्छेदयेदुत्तरम् ॥ ५ ॥

ऋजुमञ्चाख्यास्तुल्याः प्रकृतिलुपाः पार्श्वसंस्थिताः सर्वाः ।
कोटयुपकोट्याद्याः स्युर्विकृतिलुपास्तास्त्वतुल्यदीर्घतताः ॥

कार्या लुपाश्चोत्तरपङ्क्तिकोर्ध्वे कूटाहिताग्रा विकृताः समस्ताः ।
पार्श्वाहितास्ताः खलु निर्विकारा निवेशिताग्राः पुनरग्रे[2]धान्याम् ॥

पार्श्वप्राप्तलुपाग्रयोगवशतो वंशाख्यया साग्रया
युक्त्वा चोत्तरतारपादरहितव्यासोच्छ्रयं चाथवा ।
अद्र्यूर्म्यङ्गुलतारतीव्रसहिता पत्रैर्लुपातीव्रव-
द्व्यब्ध्यंशप्रमितैर्लुपापदगतैर्युक्ता लसद्वाजना ॥ ८ ॥

कूटः कोटिलुपाग्रकल्पितशिखासम्प्राप्तपार्श्वावटः
पार्श्वाक्रान्तलुपाग्ररन्ध्रनिहितायःकीलसङ्कीलितः ।
आधारोऽस्य लुपाग्रकल्पितशिखा तस्मादधो मूल ए-
वोक्तोऽसौ विकृता लुपाश्च सकला गेहे समाब्ध्यश्रके ॥

---

१. 'दस्थितो' ख. पाठः. २. 'श्रच' क. ख. पाठः.

घुर्धूरप्रसवोपमोऽष्टनृपकोणो वा तथा वर्तुलः
सम्फुल्लाब्जयुतोऽथवाथ गुलिकारूपः स्वमध्यादधः।
विस्तारद्विगुणायतस्तदुरगाद्यंशोनदीर्घोऽथवा
कूटोऽब्ध्यादियवोत्थपत्रविलसन्मध्यप्रदेशो भवेत् ॥१०॥
प्रायः सर्वलुपाघनोन्मितपरीणाहं करोतूत्तर-
व्यासप्रायततं तथाङ्गुलकृतैर्योन्यादिभिः संयुतम्।
पट्टं कोटिलुपावितानसदृशायामं लुपासङ्गम-
स्थानं पत्रपदोर्ध्वमित्थमुदितं कूटस्वरूपादिकम् ॥ ११ ॥
आयतचतुरश्रगृहे विकृतिलुपा वंशबद्धकूटगताः।
वंशस्थाग्रास्त्वन्याः प्रकृतिलुपाः कीलिता ह्ययःकीलैः ॥ १२॥
वंशाग्रमूलशिखया यदि कूटपार्श्व-
रन्ध्रप्रवेशकृतसन्धिरिहाजयुद्धः।
आधारभेदकृतसन्धिवशेन कूट-
स्याधोगतं भवति मूलमिहापि नित्यम् ॥ १३ ॥
मुखसहितायतभवने मुखपर्यन्तायतो भवेद् वंशः।
गेहवदेव मुखानामुत्तरमूलाग्रयोगविधिनियमः ॥ १४ ॥
मूलप्रदेशविलसत्कबलीसुलग्न-
वंशाग्रमूलपरिकीलितदारुकीलः।
वंशावलम्बितवशादयमूर्ध्वमूलः
कूटो यथोर्ध्वमवलम्बितबालकूटः ॥ १५ ॥
सर्वत्रेष्टाब्ध्यश्रे तिर्यगधः कल्पितात्र रेखा या।
सा हि भुजाथोर्ध्वाग्रा कोटिः स्यात् कोणगामिनी कर्णः ॥

सुश्लक्ष्णे फलकातले क्षितितले वा गेहताराधेमा-
नाब्ध्यश्रं तदधोभुजापरिमिलत्क्षुद्रोत्तरोच्चोन्मितम् ।
तस्याधो घनमुत्तरस्य च लुपालम्बं च तिर्यग्गतैः
सूत्रैः कल्पयतूत्तरोपरि लुपापङ्क्तिं च युक्त्या ततः ॥ १७ ॥

सङ्ख्याः कोट्युपकोटिकादिविकृतानां या लुपानां तत-
स्ताः सङ्ख्या द्विगुणैकसङ्ख्यरहिताः कल्प्यास्तु सर्वत्र च ।
द्वे द्वे कोट्युपकोटिकादिविकृतानामन्तराले पृथक्
तत्रैका गृहतारमध्यनिकटेऽप्येवं विभागो मतः ॥ १८ ॥

इति विकृतिलुपानां पङ्क्तिमाकल्प्य तत्त-
न्मितिनियमकृताङ्को यत्तदाक्रान्तकर्णम् ।
नियतकृतलुपालम्बादथाकूटपार्श्वे
भवति पृथगमीषां दीर्घमानं लुपानाम् ॥ १९ ॥

सर्वत्रोत्तरतारतुल्यमृजुमञ्चानां लुपानां ततं
तद्वस्वद्रिरसाशुगाब्ध्यनलभागैकोनितं वान्वितम् ।
छिन्नं चोत्तरतारतोऽङ्घ्रिरहितछिन्नं च सार्धं पुनः
कार्यं तद्धनमङ्गुलेन यववृद्ध्या यावद्दत्वङ्गुलम् ॥ २० ॥

अब्ध्यश्रं मञ्चकस्य प्रततिमितमथाकल्प्य तत्कर्णमर्धी-
कृत्य न्यस्येद् भुजायामथ विकृतिलुपापङ्क्तिमत्रैव कुर्यात् ।
तत्तत्कर्णप्रमाणं खलु विकृतिलुपानां पृथग् विस्तृतिः स्यात्
पार्श्वे कार्यं ध्वजादित्रयमपि च वितानं च लम्बं च सूत्रम् ॥

व्यासेऽङ्कांशिन्यधोऽब्धिप्रमितमुपरि बाणोन्मितं कल्पयित्वा
मध्ये सूत्रध्वजाख्यं विरचयतु लुपापार्श्वयुग्मे समन्तात् ।

अष्टांशिन्यप्यधस्तादनलमितमुदध्युन्मितं चोर्ध्वभागं
यद्वा बाणांशितेऽग्निप्रमितमुपरि दस्रोन्मितं चाप्यधस्तात् ॥
ध्वजसूत्रस्योभयतो द्वयङ्गुलमानेन कल्पयेत् सूत्रम् ।
तदधस्तादप्यूर्ध्वं तत्तद्विस्तारमाननियमः स्यात् ॥ २३ ॥
कृत्वा वेदाङ्गुलाब्ध्यश्रकमखिललुपापार्श्वयोर्मध्यसूत्रे
तद्वेदाश्रोत्थकर्णद्वितयमिह वितानं च लम्बं च विद्यात
सर्वत्रैतद् विधेयं द्वयमपि वलयस्थानकूटावसान-
स्थानेष्वप्युत्तराद्यर्पणनियमपदे नीप्रलम्बान्ततोऽपि ॥ २४

इति मनुष्यालयचन्द्रिकायां
षष्ठोऽध्यायः ।

---

**अथ सप्तमोऽध्यायः ।**

चूली वा क्वचिदल्पमन्दिरविधौ तत्रापि युग्माः स्मृता
विष्कम्भाश्च तदर्धसम्मिततदङ्घ्र्यग्रेषु वंशोऽपि च ।
तस्मादङ्घ्रिसमुच्छ्रयात् त्यजतु वा काप्यद्रिनागाङ्कदिग्-
रुद्रांशं त्विह चूलिकोपरि लुपाश्च स्वाग्रधान्याचिताः ॥ १ ॥
विस्तारे पुनरुत्तरस्य दशधा भक्ते रसाद्यष्टदिग्-
भागैर्वोत्तरतारतोऽङ्घ्रिरहितं वाष्टांशितेऽग्न्यंशकैः ।
विस्तारं प्रकरोतु नीप्रफलकस्यैतत्त्रिभागं घनं
विस्तारे शरभाजितेऽपि च घनं द्वाभ्यां प्रकुर्यात् क्वचित् ॥
नीप्रव्यासे शरांशिन्यथ तदुभयतस्तूर्ध्वपट्टं तलं च
द्वाभ्यामेकेन पट्टं चरममपि विधेयं तथा षड्विभक्ते ।

द्वाभ्यां तस्योर्ध्वपट्टं त्रिभिरपि च तलं स्यादधः पट्टमेके-
नैवं वा नागभक्ते ज्वलननिगमभूम्यंशतः कल्पनीयाः ॥
नीव्रव्यासे विभक्ते शरगिरिनवभिः सर्वतो बाह्यभागं
नीव्रस्थानाद् वितानादुपरि तदुचितं कोटिकर्णाध्वनात्र ।
नीत्वा नीव्रं लुपासु स्वयमिह विधिना धूलिकारोधयोग्यं
कृत्वा वायव्यहोमाद्यवहितहृदयः कारुभिः कल्पयेत् तत् ॥

मनुयवचतुरश्रं द्व्यङ्गुलं तत्र तु द्वि-
द्वययवपरिवृद्ध्या त्र्यङ्गुलान्तं क्रमेण ।
वलयमिति मुनीन्द्रैः षड्विधं दर्शितं ते-
ष्विह विहितलुपौचित्येन तत् कल्पनीयम् ॥ ५ ॥

तत्र सप्तदशाभिर्यवैः स्मृता पट्टिकाविततिरङ्कसम्मितैः ।
तद्धनं घनपदोनमन्तरं सन्दधीत च लुपासु कीलकैः ॥ ६ ॥

लोष्टैराच्छाद्यते चेदखिलनिलयने पट्टिकाप्रस्तरः स्यात्
तत्स्थाने क्वापि कार्योऽपि च घनफलकाप्रस्तरो बद्धकीलः ।
लोष्टाधाराय किञ्चित् तलमपि च खनेच्चाम्बुसन्धारणार्थं
ताम्रैराच्छाद्यते चेन्न तु तलरचना देवगेहादिकेषु ॥ ७ ॥

शिरःप्रदेशस्त्वभिधानमुक्तं वेश्माख्यपुंसस्तदधोमुखं स्यात् ।
मासूरतुङ्गार्धपदोनितं तद्विस्तारमाद्यङ्गघनाद् घनं च ॥ ८ ॥

द्वाराण्यङ्गणगेहमध्यसिरयोर्मध्यस्थमध्यान्यथो
कुर्यादङ्गुलकल्पितागमवयोयोनीनि पूर्वादितः ।

---

१. 'रि' ख. पाठः.

योगावुत्तरतारतुल्यविततौ विस्तारतुल्याङ्घ्रिव-
ह्यर्धांशोनघनौ भुवङ्गमपतङ्गाढ्यौ लसद्राजनौ ॥ ९ ॥

योगादङ्घ्र्यग्निभागाधिकघनयुतनिर्वाजनाधः पटी स्या-
दूर्ध्वस्थाने तु तुल्योत्तरमिलितनिजाग्रौ च योगौ विधेयौ ।
योगान्तर्भागनाहो निजदिगुचितयोन्यायवृद्ध्यादियुक्त-
स्वेष्टायामोननाहार्धत इह विततिः स्याद् गुणव्यासतो वा ॥

द्वारोर्ध्वपट्यूर्ध्वमथो गणेशपद्मालयायादवमूर्तिभेदान् ।
यथेष्टमापाद्य विचित्रपत्रिप्रभेदयुक्तां फलकां विदध्यात् ॥ ११ ॥

कुड्ये भूयिष्ठविस्तारिणि दिवसकरैर्भाजितेऽन्तर्बहिश्चा-
प्यद्रीष्वंशान् विधायान्तरविहितसिरालम्बमध्यौ च योगौ ।
कृत्वा क्वाप्येतयोर्मूर्धनि सुदृढतरामूर्ध्वपट्टीं तदूर्ध्वं
भित्त्यङ्गादीनि कुर्याद् दृढतरशिलया मृत्सुधायोगभेदैः ॥

अन्तर्नाहजमन्दिरे घनतरे कार्ये च कुड्ये क्वचिद्
गेहप्राङ्गणपादुकावधि करोतु स्वांशकुड्यं घनम् ।
तत्तत्प्राङ्गणगेहसूत्रमनुसृत्यैवेष्टकुड्यप्रथा-
निष्ठं पृष्ठत एव नेयमुदितद्वारोत्तरादीनि च ॥ १३ ॥

कवाटयुग्मं निजतीव्रयुक्तद्वारप्रथार्धप्रततं विधेयम् ।
मात्राङ्गुलैर्नेत्रहुताशसङ्ख्यैः सार्धैश्च यद्वाब्धिमितैर्घनं च ॥

ऊर्ध्वाधरभ्रमणकार्गलसन्धिपाल-
प्रक्षेपणीयवलयान्यपि पत्रकाणि ।
तिर्यञ्च्युदञ्चि पुलकार्तवकुड्मलानि
सश्रीमुखेन्दुशकलानि कवाटयोः स्युः ॥ १५ ॥

द्वारव्यासाब्धिबाणोर्म्यवनिधरभुजङ्गांशितैकांशतीव्र-
व्यासा व्यासार्धपादोनितबहलमिता द्वारतुल्यायतिश्च ।
कर्तव्या सूत्रपट्टी ज्वलनशरमहीध्रादिकौजस्तनाढ्या[1]
मुक्तादामादिपद्मस्थितमहितरमाकृष्णविघ्नेशयुक्ता ॥

माता वामगता कवाटफलका सा सूत्रपट्टयाश्रया
पुत्री दक्षिणगामिनीति सकलद्वारेषु सम्प्रेक्ष्यताम् ।
द्वारोच्चानलवेदबाणरसभागोच्चां तदुच्चाब्धिबा-
णोर्म्यंघ्र्यंशघनप्रतानसहितामाकल्पयेतारमाम् ॥ १७ ॥

द्वारव्यासपयोधिबाणरससप्तांशकात्तायतं
कुर्यादर्गलमायतोर्मिगिरिमातङ्गांशतारान्वितम् ।
विस्तारार्धघनं घनोन्मितलसत्खण्डद्वयं चारमा-
मूलाग्रान्तिकसम्प्रक्लृप्तकबलीसम्प्राप्तखण्डान्तरम् ॥

अधोर्गलं मातृकवाटसंस्थं पुत्रीगतं चार्गलमूर्ध्वसङ्गि ।
अथारमामध्यमतीत्य मध्यात् सुकीलयेताथ कवाटपृष्ठे ॥

एकजातितरुभिः प्रकल्पितं द्वारपादफलकादिकं शुभम् ।
अन्यथा यदि वधूकुशीलता सम्भवेदिति वदन्ति केचन ॥

एकं कवाटं यदि वामभागे मध्यादधो वोपरि वारमा स्यात् ।
तदर्गलं वर्तुलमष्टकोणं वेदाश्रकं वा दृढशृङ्खला वा ॥ २१ ॥

आशाभास्करसूत्रभेदिनि गृहे पृष्ठेऽथवा सप्तमे
सूत्रे द्वारमथापरं क्रमवशात् पृष्ठे निजेष्टं पुनः ।

---

१. 'जि' ग. पाठः.

सव्यार्धे भवनस्य कार्यमुचितयौन्योंदिभिः संयुतं
चैकैवेच्छति चेत् कवाटफलका वामे भवेन्निष्क्रमे ॥ २२ ॥

कुर्यात् प्राङ्गणतो गमागमकृते द्वारं महत् पादुके
तद्बाह्ये पथि पादुकोपरि गतं त्यक्त्वा मसूरोच्छ्रयम् ।
मार्गव्यासचतुर्गुणेन परिधिः स्वाभीष्टयोनिर्यथा
तद्व्यासं तु तथा करोतु च विदिग्धामास्ति चेत् कुट्टिमम् ॥

दण्डात् प्राङ्गणमध्यतोऽब्धिशरषट्सप्तादिसङ्ख्यान् व्यती-
त्यादध्यादथ पौष्पदन्तिकपदे द्वारं प्रचारोदितम् ।
भल्लाटेन्द्रगृहक्षतेष्वपि महाद्वाराण्युपद्वारका-
ण्यष्टाप्युन्नतभूतले द्वितलतद्वक्त्रादियुक्तानि वा ॥ २४ ॥

पर्जन्यकोष्ठे च भृशे च पूषिण भृङ्गेऽपि च द्वारपशोषयोश्च ।
नागेऽप्यदित्युक्तपदेऽपि चेच्छन्त्यष्टेत्युपद्वारगृहाणि नृणाम् ॥

स्तम्भाधस्तारतो वोच्छ्रयरसतुरगोऽष्टांशतो वा प्रतेर-
प्युत्सेधेनात्र सार्धावनियुगलहुताशोन्मितैश्चात्र वेदी ।
कर्तव्या कुट्टिमोर्ध्वं तदुपरि चरणैर्युग्मसङ्ख्यैश्च दारु-
स्तम्भार्धाङ्घ्र्यूनतुल्यप्रततिभिरभितः स्वोत्तराद्यैश्च भित्तिम् ॥

पत्रमानवशतोऽङ्गुलवृद्ध्या वेदिकाविहितनिष्क्रमणं स्यात् ।
सार्धयुग्मदहनादिमितैस्तैरङ्गुलैर्विहितमुत्तरलम्बात् ॥ २७ ॥

स्वद्रव्यैरेव वेदीरिह कतिचिदुशन्तीष्टकामृच्छिलाद्यै-
र्वृक्षैर्वा भिन्नजात्यैरपि च विरचितं दृश्यते सर्वगेहे ।
अन्तर्नाहेन योन्यन्वितभवनविधौ गर्भगेहोक्तनीत्या
द्वारं तत्पादुकोर्ध्वं न्यसतु पुनरधस्तात् प्रतेर्गर्तगेहे ॥

युग्मास्तुलाः स्तम्भलुपादधेः स्युः
सर्वास्त्वयुग्माः खलु पङ्क्तयस्ताः ।
नृगेहनिर्दिष्टकराधिकाश्चेद्
विनाशदास्ताः खलु पङ्क्तयः स्युः ॥ २९ ॥

प्राचीनेऽग्निसमर्चनादिकमुदीचीने कुटुम्बादिकं
व्यत्यस्य प्रकरोतु वा द्वयमिदं याम्येऽतिथिप्रीणनम् ।
पाश्चात्त्ये धनसन्निधापनमदो द्वन्द्वं विपर्यस्य वा
शेषार्धे तु तयोस्तथा शयनविद्याभ्यासनाद्यं चरेत् ॥

कृत्वा दिङ्नवनागवर्गपदभिन्ने क्षेत्रकेऽन्तर्गतै-
रष्टयङ्काब्धिमितैर्विधातृपदयुक्तं प्राङ्गणं मध्यत ।
शालाः पङ्क्तियुगार्यकादिकजुषस्तद्बाह्यतस्तद्बहि-
र्गोष्ठोलूखलवेश्मकादिविलसत्पङ्क्त्यावृतं कल्पयेत् ॥३१॥

कार्तान्त्यां खलसद्म धान्यभवनं तत्रापि वा नैर्ऋते
कुर्वीताथ धनालयं धनपतौ प्राच्यां तथापांपतौ ।
सिंहे वालितुलाकुलीरभवने धान्यालयोक्तेषु वा
धान्यागारविधिर्धनोदितपदे कुत्रापि चावश्यके ॥ ३२ ॥

गोशालेन्द्रजलेशयोर्वितथपूषाभ्यन्तराले मता
पर्जन्यैन्द्रिपदे तथा कुसुमदन्तद्वारपालान्तरे ।
भृङ्गे शोषपदेऽथवात्र महिषागारं यमेऽप्युक्षशा-
लास्मिन् काप्यथवास्तु मर्मविलसच्छूलं समस्तं त्यजेत् ॥

---

१. 'यः' क. पाठः.

क्षेत्रस्य कोणगतरज्जुमतीत्य यानं
नेच्छन्ति केचन गवामखिलेषु दिक्षु ।
मुख्यं वृषं न मृगराट्करणेषु सिंह-
व्याघ्रौ स्थिरं च करणं शुनि गर्दभाद्याः ॥ ३४ ॥

पर्जन्ये पचनालयं शिखिनि वा मेषे वृषे वानिले
तत्रैवापि च भुक्तिसद्म मकरे चापांपतौ चेष्यते ।
कुम्भे सौख्यगृहं तथैव मकरे वायौ तदावश्यके
कर्तव्यं वृषमेषयोरिदमथो वायौ तथोलूखलम् ॥ ३५ ॥

मीने कूपमतीव मुख्यमुदितं सर्वार्थपुष्टिप्रदं
मेषे चापि घटे च भूतिकृदिदं नक्रे वृषेऽर्थप्रदम् ।
आपे कूपमथापवत्सकपदे मुख्यं तथैवेन्द्रजि-
त्कोष्ठे दृष्टमपांपतौ तु शुभदं नारीक्षयं मारुते ॥ ३६ ॥

कूपं शोभनमन्तरिक्षपदकेऽप्येवं तटाकं हितं
माहेन्द्रे च महीधरे च वरुणे सोमे शिवे मेषभे ।
वायौ वा निर्ऋतौ च दृष्टमथवा स्नानादिपानादिषु
प्रायो नैकजलं(हितं ?) नदीजलमृतेऽत्रान्यत् पृथक् कल्पयेत् ॥

आग्नेय्यां भवनस्य कूपखननं पूर्वं कृतं वा तथा
वापी दाहभयादिकं प्रकुरुते तद्वत् फलं दक्षिणे ।
ग्रामादेरपि दीर्घिकादि कतिचिन्नेच्छन्ति याम्ये तथै-
वारामो गृहसन्निधौ फणभृतां वासोऽपि नैवेष्यते ॥ ३८ ॥

राज्ञां धामानि भूसुरस्थितिगृहं नित्यार्चनायाङ्गणे
शर्वेन्द्राग्निजलेशदिक्षु कुलदैवार्चाप्रतिष्ठादि च ।
प्रासादादिविधानमीशसुरनाथाग्न्यन्तकाशागतं
केतूत्थं वृषजं करोतु च निर्ऋत्यादौ क्रमाच्छ्रेयसे ॥ ३९ ॥

सेवितकुलदैवतधामेशनिर्ऋत्यादिके तु वृषजं स्यात् ।
गृहपुरपत्तननगरग्रामादावभिमुखा भवन्ति तदा ॥ ४० ॥

निरङ्गसाङ्गादिविभिन्नगेहप्रतिष्ठिता याः प्रतिमास्तु तासाम् ।
चलाचलत्वोभयभेदतस्तत्क्रियावशाच्चापि भवेद् विशेषः ॥

सौख्यार्थं धरणीभृतां मणिगृहं मित्रे विहारोऽनिले
व्यायामोऽर्गलके तथैव निर्ऋतौ स्नानादि पर्जन्यके ।
इन्द्रे तोयपतौ च भुक्तिनिलयं नृत्तादि गान्धर्वके
शस्त्राद्यं निर्ऋतौ गृहक्षतपदे प्राच्ये च शय्यागृहम् ॥ ४२ ॥

दण्डान्तं समतीत्य वप्रमुदितं मृद्भिः शिलाद्यैस्तथा
श्रेष्ठं तत् परिखा तु मध्यममते शाखावृतिश्चाधमम् ।
तत्पानादिषु कण्टकिद्रुमलता ग्राह्याश्च वेण्वादयः
कुर्याद् द्रव्यवशादिहैकमुदितान् वृक्षांश्च दिक्षु क्रमात् ॥

एवं निर्माप्य गेहं प्रथममिह वृतस्तन्त्रिवर्यस्तदन्ते
तत्कर्तॄन् शिल्पिनस्तान् वलयमणिलसत्कुण्डलाद्यैर्यथेष्टम् ।
सन्तोष्यापाद्य चैतत् स्वयमपि यजमानेन सम्यङ्मुहूर्ते
गत्वा तद्वास्तुपूजाद्यखिलशुभविधिं साधु कुर्वीत तस्मिन् ॥४४॥

---

१. 'मा १' क. पाठः.

कर्ता चाथ क्रियान्ते महितगुरुवरं भोजयित्वा यथेष्टं
गोभूम्याद्यैश्च दत्त्वा विधिवदवहितो दक्षिणां मुख्यरूपाम् ।
आज्ञामादाय तस्मान्निखिलमपि जनं प्रीणयन् भूरिदानैः
स्वीयैः सार्धं स्वगेहे सुचिरमधिवसेत् पूर्णकामः सुखेन ॥ ४५ ॥

इति मनुष्यालयचन्द्रिकायां बाह्यगेहकूपतटाकादिविधानं नाम
सप्तमोऽध्यायः ॥

---

समाप्ता मनुष्यालयचन्द्रिका ॥

शुभं भूयात् ।

## READY FOR SALE.

---

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Sri Râma Varma Mahârâjah. | 1 | 0 | 0 |

---

### Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalilâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalilâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dikshita | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | | |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Niti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mimâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I, 1 & 2 Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1 & 2 Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II, 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III, 4th, 5th & 6th Kândas) | 1 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dipaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopinâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III, 6th, 7th & 8th Sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with the commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatiya Sarvânanda (Part I, 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Sri Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srí Sankara Bhagavat Pada. | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshîraswamin and Tîkasarvaswa of Vandyaghatîya Sarvananda (Part II, 2nd Kanda 1-6 Vargas) | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Sri Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyákarana) by Nilakantha Dikshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Sri Krishnânânda Sarasvati. (Part I) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः (Alankara) by Singa Bhûpâla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshiraswâmin and Tikâsarvaswa of Vandyaghatiya Sarvananda (Part III, 2nd Kanda 7 –10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikâsarvaswa of Vandyaghatiya Sarvananda (Part IV, 3rd Kanda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedânta) by Prakâsâtmayatindra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः (Vyâkarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nâtaka) by Sri Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका (Silpa) | 0 | 8 | 0 |

***Apply to:—***

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum.*

